॥ नारायणस्तुती ब्रह्मोक्त नरसिंहपुराणे ॥

नारद उवाच
किं तज्ज्ञानं परं देव कश्च योगः परस्तथा ।
एतन्मे तत्त्वतः सर्वं त्वमाचक्ष्व पितामह ॥ ५९॥

ब्रह्मोवाच
यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतानां नर इत्यभिधीयते ॥ ६०॥

नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥ ६१॥

नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते ॥ ६२॥

नारायणः परं ब्रह्म तत्त्वं नारायणः परम् ।
नारायणः परं ज्योतिरात्मा नारायणः परः ॥ ६३॥

परादपि परश्चासौ तस्मान्नातिपरं मुने ।
यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ॥ ६४॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
एवं विदित्वा तं देवाः साकारं व्याहरन्मुहुः ॥ ६५॥

नमो नारायणायेति ध्यात्वा चानन्यमानसाः ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ ६६॥

यो नित्यं ध्यायते देवं नारायणमनन्यधीः ।
एतज्ज्ञानं वरं नातो योगश्चैव परस्तथा ॥ ६७॥

परस्परविरुद्धार्थैः किमन्यैः शास्त्रविस्तरैः ।
बहवोऽपि यथा मार्गा विशन्त्येकं महत्पुरम् ॥ ६८॥

तथा ज्ञानानि सर्वाणि प्रविशन्ति तमीश्वरम् ।
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ॥ ६९॥

जगदादिरनाद्यन्तः स्वयम्भूर्भूतभावनः ।

विष्णुर्विभुरचिन्त्यात्मा नित्यः सदसदात्मकः ॥ ७०॥

वासुदेवो जगद्वासः पुराणः कविरव्ययः ।
यस्मात्प्राप्तं स्थितिं कृत्स्नं त्रैलोक्यं सचराचरम् ॥ ७१॥

तस्मात् स भगवान्देवो विष्णुरित्यभिधीयते ।
यस्माद्वा सर्वभूतानां तत्त्वाद्यानां युगक्षये ॥ ७२॥

तस्मिन्निवासः संसर्गे वासुदेवस्ततस्तु सः ।
तमाहुः पुरुषं केचित्केचिदीश्वरमव्ययम् ॥ ७३॥

विज्ञानमात्रं केचिच्च केचिद्ब्रह्म परं तथा ।
केचित्कालमनाद्यन्तं केचिज्जीवं सनातनम् ॥ ७४॥

केचिच्च परमात्मानं केचिच्चैवमनामयम् ।
केचित्क्षेत्रज्ञमित्याहुः केचित्षड्विंशकं तथा ॥ ७५॥

अङ्गुष्ठमात्रं केचिच्च केचित्पद्मरजोपमम् ।
एते चान्ये च मुनिभिः संज्ञाभेदाः पृथग्विधाः ॥ ७६॥

शास्त्रेषु कथिता विष्णोर्लोकव्यामोहकारकाः।
एकं यदि भवेच्छास्त्रं ज्ञानं निस्संशयं भवेत् ॥ ७७॥

बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ।
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥ ७८॥

इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
त्यक्त्वा व्यामोहकान् सर्वान् तस्माच्छास्त्रार्थविस्तरान् ॥ ७९॥

अनन्यचेता ध्यायस्व नारायणमतन्द्रितः ।
एवं ज्ञात्वा तु सततं देवदेवं तमव्ययम् ॥ ८०॥

क्षिप्रं यास्यसि तत्रैव सायुज्यं नात्र संशयः ।
श्रुत्वेदं ब्रह्मणा प्रोक्तं ज्ञानयोगं सुदुर्लभम् ॥ ८१॥

ततोऽहमासं विप्रेन्द्र नारायणपरायणः ।
नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम् ॥ ८२॥

अन्तकाले जपन्तस्ते यान्ति विष्णोः परं पदम् ।
तस्मान्नारायणस्तात परमात्मा सनातनः ॥ ८३॥

अनन्यमनसा नित्यं ध्येयस्तत्त्वविचिन्तकैः ।
नारायणो जगद्व्यापी परमात्मा सनातनः ॥ ८४॥

जगतां सृृष्टिसंहारपरिपालनतत्परः ।
श्रवणात्पठनाच्चैव निदिध्यासनतत्परैः ॥ ८५॥

आराध्यः सर्वथा ब्रह्मन् पुरुषेण हितैषिणा ।
निः स्पृृहा नित्यसंतुष्टा ज्ञानिनः संयतेन्द्रियाः ॥ ८६॥

निर्ममा निरहंकारा रागद्वेषविवर्जिताः ।
अपक्षपतिताः शान्ताः सर्वसंकल्पवर्जिताः ॥ ८७॥

ध्यानयोगपरा ब्रह्मन् ते पश्यन्ति जगत्पतिम् ।
त्यक्तत्रया महात्मानो वासुदेवं हरिं गुरुम् ॥ ८८॥

कीर्तयन्ति जगन्नाथं ते पश्यन्ति जगत्पतिम् ।
तस्मात्त्वमपि विप्रेन्द्र नारायणपरो भव ॥ ८९॥

तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः ।
हेलया कीर्तितो यो वै स्वं पदं दिशति द्विज ॥ ९०॥

अपि कार्यस्त्वया चैव जपः स्वाध्याय एव च ।
तमेवोद्दिश्य देवेशं कुरु नित्यमतन्द्रितः ॥ ९१॥

किं तत्र बहुभिर्मन्त्रैः किं तत्र बहुभिर्व्रतैः ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥ ९२॥

चीरवासा जटाधारी त्रिदण्डी मुण्ड एव वा ।
भूषितो वा द्विजश्रेष्ठ न लिङ्गं धर्मकारणम् ॥ ९३॥

ये नृृशंसा दुरात्मानः पापाचाररताः सदा ।
तेऽपि यान्ति परं स्थानं नरा नारायणाश्रयाः ॥ ९४॥

जन्मान्तरसहस्रेषु यस्य स्यद्बुद्धिरीदृृशी ।
दासोऽहं वासुदेवस्य देवदेवस्य शार्ङ्गिनः ॥ ९५॥

प्रयाति विष्णुसालोक्यं पुरुषो नात्र संशयः ।
किं पुनस्तद्गतपुराणः पुरुषः संयतेन्द्रियः ॥ ९६॥

इति ।

नरसिंहपुराणे अध्याय ६४ श्लोक ५९-९६, अध्याय श्लोक संख्या १२४